श्रेष्ठि देवचन्द्र लालभाई–जैनपुस्तकोद्धारे–ग्रन्थाङ्कः २८

श्रीविबुधविमलसूरिकृतौ

# श्रीसम्यक्त्वपरीक्षा–उपदेशशतकौ.

मुद्रयिता–अस्यैकः कार्यवाहकः, शाह–नगीनभाई घेलाभाई जव्हेरी, ४२६ जव्हेरीबाजार, मुम्बय्याम्.

वीरसंवत् २४४३. विक्रमसंवत् १९७३. इस्वाब्द १९१६.

प्रति ५००. वेतनं २ आणकौ. मोहमय्याम्.

## श्रीसम्यक्त्वपरीक्षाया उपदेशशतकस्य चोपोद्घातः ।

### श्रीगणधरेन्द्रो विजयतेतराम् ।

विदितततममेतद् विदुषां विदितवेद्यानां यदुतानेका लघवोऽप्यलघवो ग्रन्थाः सम्पद्यन्ते कुमतपाथोधिमथनमन्थानतया बोधसद्रत्न [illegible]ः तद्वद्देषोऽप्युपदेशशतकाख्यो ग्रन्थो बोधरत्नग्रन्थिर्विलोकनीयो विलोककानां, ग्रन्थाभिधानहेतुस्तु काव्यानां [illegible] व्यवहारेणैतदवेक्षणेनाष्टानामाधिक्येऽपि न क्षतिः, तस्योपचारबहुलत्वेन विश्रुतत्वात् विपश्चिद्वृन्दे, विधातारश्चास्य श्र[illegible]तपादपद्मपरागपङ्कजप्रियाः श्रीमन्तो विबुधविमलाभिधानाः सूरिवर्याः, श्रीमत्सु सूरिमन्त्ररत्नसमर्पणरोहणायमा[illegible]तिसागराह्वयाः सूरिधुर्याः, अन्वयश्चैषां न्यायाचार्यसाहाय्यकसाधितजनपदजनमनसः श्रीमतो ज्ञानविमलसूरेः [illegible]द् १०५ पञ्चाधिकशततमकाव्यमवेक्षणीयमत्रैव, ज्ञानविमलगुरो ऋद्धिविमलप्रभवस्ततो विमलकीर्त्तियो विमलकीर्त्त[illegible]र्वाचलार्यमभासः श्रीमन्तो बभासिरे शासनं, पूज्यपादप्रणीता नोपलब्धिपथमायाता अपरे ग्रन्था इति नैवोपलभ्यन्त श्रीमतां जन्मभूमीजनकजनन्याद्यभिधानानि, ज्ञापयिष्यन्ति बोद्धार उपकृता भविष्यामः । प्रस्तुते च "अनित्याशरणभवैकान्याशुचित्वाश्रवसंवरनिर्जरालोकस्वभावबोधिदुर्लभधर्मस्वाख्यातत्वानुचिन्तनमनुप्रेक्षाः" (तत्त्वा० अ० ९ सू० ७) "पढममणिच्चमसरणं संसारो एगया य अन्नत्त । असुइत्तं आसंव संवरो य तह निज्जरा नवमी ॥ १ ॥ लोगसहावो बोही"

दुलहा धम्मस्स साहगा अरिहो " इति नवतत्त्वप्रकरणगं चावलम्ब्य वैराग्यभावना विस्तृताः, भावनाप्राबल्यं चावश्यमेव आतन्नसिद्धिताकरं कर्मकचवरविशोधनपटिष्टं चेति नागमविदां नूत्नं निवेदनीयं, आहुः कलिकालसर्वज्ञपादा अपि स्वोपज्ञे योगशास्त्रे–"मोक्षः कर्म्मक्षयादेव, स चात्मज्ञानतो भवेत् । ध्यानसाध्यं मतं तच्च " " विना समत्वमारब्धे, ध्याने स्वात्मा विडम्ब्यते " "साम्यं स्यान्निर्ममत्वेन, तत्कृते भावनाः श्रयेत्" तथा च निर्ममत्वसाम्यध्यानात्मज्ञानमोक्षाभिलापिणामनुष्ठेयतमा एव भावना इति विषय उपर्युक्ततर एव, किञ्च यत्पश्चिमोऽत्र भागो भूपितो दशभिः क्षमादिभिर्यतिधर्मैः तत् सुगन्धिसुवर्णवदाशंसनीयमेव विज्ञानां, यतो 'बन्धहेत्वभावनिर्जराभ्याम्' (तत्त्वा० अ० १० सू० २) इति सूत्रसतत्त्वावधृतधारणानां मोक्षसाधनयोः संवरनिर्जरयोरत्र सद्भाव इति संपूर्णापवर्गमार्गानुकूल्यमेतदीयवाग्व्रजविचारणानुष्ठानाभ्यां भवेत्, सम्यक्त्वपरीक्षा तु स्वनाम्नैवावश्यकतां स्वस्याविभीवियन्ती केन नावलोकनीया ? तदुक्त्यनुष्ठितिश्च करणीया न स्यादिति, तथाकरणेन सफलयन्तु च परिश्रमलेशं मुद्रणस्येति प्रार्थयते पुस्तकोद्धारविधिनिरतः श्रीश्रमणसङ्घान्तर्गतान्तरानिशम् आनन्दसागरः । राजनगरात् २४४३ कार्तिककृष्ण षष्ठ्यां ॥

श्रेष्ठि देवचन्द्र लालभाई - जैनपुस्तकोद्धार - ग्रन्थाङ्कः—

श्रीविबुधविमलसूरिकृता

## ॥ श्रीसम्यक्त्वपरीक्षा ॥

॥ श्रीसरस्वत्यै नमः श्रीगुरुभ्यो नमः ॥

### ॥ प्रथमोऽधिकारः प्रारभ्यते ॥

प्रणम्य परया भक्त्या, श्रीमत्पार्श्वजिनेश्वरम् । नत्वा गुरुक्रमाम्भोजं, सम्यक्त्वादि परीक्ष्यते ॥ १ ॥ यद्यपि बहवो ग्रन्थाः, पूर्वाचार्यैः सुवर्णिताः । तथापि क्रियते ग्रन्थो, बालानां सुखहेतवे ॥ २ ॥ यथाप्रवृत्ति-निष्ठानां, भव्यानां शुक्लपक्षिणाम् । रागद्वेषघनग्रन्थिभेदिनां शुभभावतः ॥ ३ ॥ मिथ्यात्वस्य परित्यागात्, सम्यक्त्वं क्षायिकादिकम्।उत्पद्यते च संसारसमुद्रपारदायकम्॥४॥युग्मम्।धर्मः श्रुतमयो ज्ञेयो, मार्गो ज्ञानादिकः

पुनः । समाचारीस्थितः साधुर्जीवश्च प्राणधारकः ॥५॥ मुक्तो मुक्तौ गतो रागद्वेषौ त्यक्त्वैव केवली । एतेषु खलु पञ्चस्वधर्मसंज्ञा विधीयते ॥ ६ ॥ मिथ्याशास्त्रादिमिथ्यात्वहिंसादौ धर्मतः पुनः । मिथ्यात्वं दशधा प्रोक्तं, स्थानाङ्गे हि सविस्तरम् ॥ ७ ॥ इति मिथ्यात्वभेदाख्योऽधिकारः प्रथमो गतः । विबुधाचार्यवर्योक्तः, सिद्धान्ताक्षरसंमतः ॥ ८ ॥ इति मिथ्यात्वरूपः प्रथमोऽधिकारः ॥

॥ द्वितीयोऽधिकारः॥ अथ सम्यक्त्वभेदाख्योऽधिकारो हि द्वितीयकः।प्रारभ्यते समासेन, दर्शनशुद्धिकारकः॥९॥ तदितरत्तु सम्यक्त्वमुपशमादिकं पुनः । क्षयोपशमवैचित्र्याद्बहुविधं जिनागमे ॥ १० ॥ एतादृशं तु सम्यक्त्वं, धार्यं निर्मलबुद्धिभिः । शमसंवेगनिर्वेदानुकम्पास्थासुलक्षितम् ॥ ११ ॥ नयप्रमाणसापेक्षं, स्याद्वादादिसुनिश्चितम् । शङ्काकाङ्क्षाचिकित्सान्यशंसासंस्तववर्जितम् ॥ १२ ॥ आत्मा नित्यो हि कर्ता च, भोक्ता स्वकृतकर्मणाम् । मुक्तिस्तत्साधनं चैव, स्थानानि षट् मतान्यपि ॥ १३ ॥ इति सम्यक्त्वरूपोऽयमधिकारः समाप्तिताम् । अगमत्तु द्वितीयोऽथ, मिथ्यामतिविभेदकः ॥१४॥ इति सम्यक्त्वभेदाख्यो द्वितीयोऽधिकारः ॥



॥ तृतीयोऽधिकारः॥ अथ नयप्रमाणाख्यः प्रारभ्यते तृतीयकः।सत्सम्यक्त्वपरीक्षायां भव्यजीवोपकारकः ॥१५॥

समीसितौम् । अगमिच्चु द्वितीयोऽथ, मिथ्यामतिविभेदकः ॥१४॥ इति सम्यक्त्वभेदाख्यो द्वितीयोऽधिकारः ॥



॥तृतीयोऽधिकारः॥ अथ नयप्रमाणाख्यः, प्रारभ्यते तृतीयकः।सत्सम्यक्त्वपरीक्षायां, भव्यजीवोपकारकः ॥१५॥ नैगमसंग्रहौ ज्ञेयौ, व्यवहारर्जुसूत्रकौ। शब्दसमभिरूढैवंभूताः सप्त नयाः स्मृताः॥१६॥प्रत्यक्षं च परोक्षं च, प्रमाणं द्विविधं भवेत् । सांव्यवहारिकं चाद्यं, स्यादसांव्यवहारिकम् ॥ १७ ॥ इन्द्रियजं मतं पूर्वमिन्द्रियातीतजं परम् । मतिः श्रुतं परोक्षं च, प्रत्यक्षं देशसर्वतः ॥१८॥ अवधिज्ञानसंयुक्तं, मनःपर्यायमेव च । देशप्रत्यक्षमाख्येयं, केवलं सर्वतो मतम्॥१९॥ पदार्थोऽनन्तधर्मात्मा, युगपन्नैव भाष्यते । स्यादित्यपेक्षया धर्मः, स्याद्वादः स उदाहृतः ॥२०॥ यः पुरुषःपिता सूनुः, पुनः स एव कथ्यते । भागिनेयो भवेद्यस्तु, मातुलोऽपि स एव हि ॥२१॥एकान्तेन प्रभुः कोऽपि,कश्चिद्धर्मं न भाषितुम्। अपेक्षाकथनात्प्राज्ञैः,स्याद्वादस्तु समर्थितः॥२२॥स्याद्वादो यत्र तत्र स्यात् ,सम्यक्त्वं प्रतिपादितम् ।एकान्तेनैव मिथ्यात्त्वं, प्रोक्तं सूत्रकृदागमे॥२३॥जैनचैत्यानि निर्ग्रन्थाः, सामायिकागमादयः। एषु निःशङ्किताचारा,अष्टौ सम्यक्त्वसाधनम्॥२४॥निःशङ्कितं भवेदाद्यो,निष्काङ्क्षित द्वितीयकः।दर्शनस्यं किलाचारस्तृतीयो निर्विचिकित्सितम्॥२५॥ चतुर्थोऽमूढदृष्टित्वं, गुणिप्रशंसनं वरम्।यत्स्थिरीकरणं षष्ठो,वात्सल्यं भक्ति-

रूपता ॥ २६ ॥ सप्तमस्त्वयमाचारोऽष्टमः प्रभावनामयः। आचाराः कथिता अष्टौ, सम्यक्त्वस्यैव निर्मलाः ॥२७॥ श्राद्धानां जिनपूजायां, सामायिके च पौषधे। योजनीया यथायोगमाचाराः सकला अपि ॥२८॥ श्राद्धानां प्रथमं पूजा, द्रव्यभावस्तवात्मिका। परिग्रहार्तिरौद्राधिबाह्याभ्यन्तररोगहृत् ॥२९॥भेषजमिव संदिष्टा, विधिवत्परमेश्वरैः। प्राक्पौषधोपवासादेस्सभरणोपमात्पुनः॥३०॥सतसम्यक्त्वपरीक्षायाः,श्रीविबुधविमलसूरिकृता(क्लृप्ता)याःसमाप्तिमगमत्तृतीयोऽयमधिकारो मिथ्यात्वभित् ॥ ३१ ॥ इति नयप्रमाणाख्यः तृतीयोऽधिकारः ॥

॥चतुर्थोऽधिकारः॥ नत्वा चैत्यानि जैनानि, स्मृत्वा गुरुक्रमाम्बुजम्।सम्यक्त्वसाधनं मुख्यमर्हच्चैत्यार्चनं त्रिधा॥ ३२॥चतुर्थोऽथाधिकारोऽयं, सम्यक्त्वस्थैर्यकारणम्। प्रारभ्यते प्रमोदेन, भव्यानां सुखहेतवे ॥३३॥ हुण्डावसर्पिणीकाल, आगतो भस्मयोगतः । भस्मग्रहविकारेणोत्थितं शासनपीडनम् ॥ ३४ ॥ परमिन्द्रादिभावेन, प्रभुवचःप्रभावतः । अभूत्तत्कारिणां पीडा, तद् दुःखं कृपया महत ॥ ३५ ॥ युग्मम् ॥ जैनानां जैनचैत्यानि, परं सम्यक्त्वसाधनम् । जैनाभाससतभ्रान्तैर्निषिध्यन्ते कुयुक्तिभिः ॥३६॥ ढुण्ढका ग्रथिलप्राया, लुङ्का व्युद्-

ग्राहिता जडाः । उन्मत्तवद् ब्रुवन्त्येवार्हच्चैत्यार्चानिषेधनम् ॥ ३७॥ उत्सूत्राण्यष्टपञ्चाशत्सङ्ख्यानि भाषितानि तैः । ढुण्ढकैर्ग्रथिलत्वेन, स्वीयसंसारवृद्धितः ॥ ३८ ॥ कलङ्काभावसंयुक्ते, शासने चैत्यशोभिते । दुष्टैः कलङ्किते यस्मिन्, ग्राह्यं परीक्ष्य तद् बुधैः ॥ ३९॥ स्वर्णोपमं हि सम्यक्त्वं, वह्नितुल्याः कुयुक्तयः। ग्राहकैस्तत्र भव्यौघैः, परीक्ष्यतेऽग्नितापने ॥ ४० ॥ त्यक्तस्त्री प्रतिमा जैनी, चापादिशस्त्रवर्जिता । दृष्टा भव्यजनैर्भक्त्या, संसारभयभेदिनी ॥४१॥ परीक्षा प्रथमेत्येषा, निर्विकारितया मता । मूर्तिर्दृष्टाऽर्हतां भव्यैरमृतानन्ददायिनी ॥ ४२ ॥ इति कषपट्टीसदृशा प्रथमपरीक्षा समाप्ता ॥ श्रीअर्हत्प्रतिमाराध्या, गणभृत्प्रतिपादिता । अनुयोगादि-सिद्धान्ते, निक्षेपस्याधिकारतः ॥ ४३ ॥ नाम च स्थापना द्रव्यं, भावश्चेत्यनुयोगके । प्रोक्तं निक्षेपचातुष्कं, स्थानाङ्गे तस्य सत्यता ॥४४॥ श्रीवीतरागबिम्बे स्याच्चैत्यशब्दः प्रवर्तते। संज्ञानार्थश्चितीधातुर्घञ्प्रत्ययान्तसं-मतः ॥ ४५ ॥ काष्ठपाषाणरूपेषु, यदाकृतिविलोकतः । संज्ञानं स्मरणं तेषामुद्बोधकात्प्रजायते ॥४६॥ चिञ् चयने (इ)तिधातोस्तु, चैत्यशब्दः प्रदर्श्यते। अर्हद्यक्षादिगेहेषु, पीठबद्धे तरावपि ॥४७॥ नैकार्थनाममालायां,

सम्य-
क्त्वप०
६

त्रयोऽर्थाः प्रतिपादिताः। ज्ञानार्थश्चैत्यशब्दश्च, वनवाची तिरस्कृतः ॥ ४८ ॥ स्थानाङ्गे दशधा सत्यं, जनपदादिवाक्यतः । संमतं सत्यभेदेन, चैत्यस्यार्थास्त्रयः स्मृताः ॥ ४९ ॥ व्युत्पत्त्या न हि सर्वेऽपि, शब्दाः सर्वत्र सङ्गताः । गोशब्दो यदि गत्यर्थः, कीटिकादौ न किं मतः! ॥ ५० ॥ कदाग्रहवशेनैव, मूर्खेण केनचिन्मुधा । व्याकरणादिसूत्रेण, ज्ञानार्थको हि साधितः ॥ ५१ ॥ कुत्रचिन्नाममालायां, ज्ञानार्थको न भाषितः। ज्ञेयोऽर्हत्प्रातिमावाची, चैत्यशब्दो बहुस्थले ॥ ५२ ॥ आनन्दकामदेवादिश्राद्धसम्यक्त्वसूत्रके। तीर्थकृत्प्रतिमावाची, चैत्यशब्दस्तु निश्चितः ॥ ५३ ॥ सूर्याभादिकदेवानां, सम्यग्दृशां सुसूरिभिः । आगमेषूदितं चैत्यार्चनं हितादिकारणम् ॥ ५४ ॥ परीक्षा छेदतुल्येति, द्वितीया चैत्यहेमसु । सिद्धान्ताक्षरटङ्कैस्तु, सुधीभिर्विहिता भृशम् ॥ ५५ ॥ इति द्वितीया परीक्षा समाप्ता ॥ परीक्षैव तृतीयाऽथ, प्रारभ्यतेऽग्नितापवत् । श्रमणोपासकानां नो, हिंसा द्रव्यस्तवेऽर्हताम् ॥ ५६ ॥ श्रमणोपासकानां हि, द्रव्यस्तवस्तु मुख्यतः । महानिशीथसूत्रोक्तो, भावस्तवोऽपि संमतः ॥ ५७ ॥ रुद्रध्यानप्रमादेन, कृष्णलेश्यादियोगतः । प्राणानां व्यपरोपत्वं,

हिंसा पञ्चेन्द्रियस्य हि ॥ ५८ ॥ प्राणिनां द्वीन्द्रियादीनां, महारम्भः प्रभाषितः । आरम्भो भूतसत्त्वानां, व्यवहाराद्विवाक्षितः ॥ ५९ ॥ शास्त्रे हिंसा त्रिधोक्तानुबन्धहेतुस्वरूपतः । जिनाज्ञाभङ्गमिथ्यात्वाद्धिंसा स्यात्सानुबन्धिका ॥ ६० ॥ अयतनाप्रवृत्तेश्च, हेतुर्हिंसा प्रकीर्तिता । यतनां कुर्वतां पुंसां, हिंसा स्वरूपतो मता ॥६१॥ हिंसैव सर्वतो दुष्टा, यद्यपि प्रतिपादिता । यदुत्सर्गापवादाभ्यां, वर्जनीया तथापि च ॥ ६२ ॥ कष्टसाध्यः खलूत्सर्गः, सुखसाध्यापवादता । सिद्धान्तवृत्तिकायां च, तयोर्लक्षणमीरितम् ॥ ६३ ॥ ज्ञानदर्शनचारित्राण्येव मोक्षस्य मार्गता । जघन्यमध्यमोत्कृष्टादाराध्या पञ्चमाङ्गके ॥ ६४ ॥ उत्कृष्टाराधनोत्सर्गाज्जघन्या चापवादतः । मध्योत्सर्गापवादाभ्यां, भगवत्यङ्गनिश्चिता ॥ ६५ ॥ ज्ञानादीनां तु मार्गाणामेकैकाराधना त्रिधा । जघन्यमध्यमोत्कृष्टा, सङ्ख्यासङ्ख्यातभेदिका ॥ ६६ ॥ जघन्याराधनाया हि, स्थानान्यप्रमितानि च । एवं ज्ञेयानि सर्वत्र, मध्यमोत्कृष्टयोरपि ॥ ६७ सम्यग्दृष्टिगुणस्थाने, देशव्रतगुणे तथा । ज्ञानाद्याराधना प्रोक्ता, जघन्यादिकभेदतः ॥ ६८ ॥ चतुर्थे तु गुणस्थाने, व्रताभावो विशेषतः । सम्यक्त्वव्रतिभक्त्यैव, ज्ञानाद्यारा-

धना मता ॥ ६९॥ दीक्षासाहाय्यदानेन, चारित्रादिमहोत्सवात् । चैत्यप्रासादभक्तेश्च, ज्ञानाद्याराधना भवेत् ॥ ७० ॥ एवं देशगुणस्थाने, प्रत्याख्यानाद्विशेषतः । चारित्राराधना प्रोक्ता, भक्त्यादौ यतना बहुः ॥ ७१ ॥ त्यागोऽनुबन्धहिंसाया, भक्तादिके च दृश्यते । हेतुस्वरूपतो हिंसा, ततोऽत्यन्तलघीयसी ॥ ७२ ॥ प्रोक्तानुबन्धहिंसाया, हेतुहिंसा लघीयसी । तस्याः स्वरूपहिंसापि, लघीयसीतरा तथा ॥ ७३ ॥ उपदेशो न हिंसाया, द्रव्यस्तवेऽर्हतां पुनः । श्राद्धानामनुबन्धाच्च, हिंसात्यागस्तु पूजने ॥ ७४ ॥ परिग्रहमहारम्भत्यागो द्रव्यस्तवे भवेत् । श्रमणोपासकानां च, जिनप्रासादसर्जने ॥ ७५ ॥ यत्साधर्मिकवात्सल्यं, तीर्थयात्राव्रतोत्सवः । उद्यापनादिकं ज्ञेयं, सर्वं युश्वं जिनागमे ॥ ७६ ॥ कृष्णश्रेणिकमुख्यानां, ज्ञान्यादिबहुभक्तितः । ज्ञानाद्याराधना जाता, ज्ञातादिसूत्रतः श्रुता ॥ ७७ ॥ अर्थात्कामाच्च धर्माच्च, ये घ्नन्ति मन्दबुद्धिकाः । प्रश्नव्याकरणे यत्स्यात्, तत्तु मिथ्यात्वसङ्गमात् ॥ ७८ ॥ अन्यथा किमु साधूनां, वैयावृत्त्यादि कल्पते । प्रतिक्रमणमत्र स्याच्चेन्मिथ्यात्वं कथं गतम् ? ॥ ७९ ॥ यत्र चेत्प्राणिनां घातस्तत्र मिथ्यात्वमुच्यते । भोश्चित्ते तु

तथैवं (तवैवं) स्यात्, सम्यक्त्वं कस्य कथ्यते ? ॥ ८० ॥ धर्मार्थं प्राणिनां घातो, मिथ्यात्वं तत्र मन्यते ।
विहारादौ मुनीनां चेन्मिथ्यात्वं किं न कथ्यते ? ॥ ८१ ॥ चेत्प्रतिक्रान्तितो नैव, मिथ्यात्वं प्रतिपाद्यते ।
प्रायश्चित्तं श्रुते प्रोक्तं, दशधालोचनादिकम् ॥ ८२ ॥ मिथ्यात्वप्रतिपत्तौ च, महाव्रतविघातने । यदीर्यायाः
प्रतिक्रान्तौ, शुद्धिर्भवति निर्मला ॥ ८३ ॥ चेत्पुनश्चरणारोपो, वृथा सूत्रे निरूपितः । विहारादौ न मिथ्यात्वं,
मूलच्छेदोऽपि तन्न हि ॥ ८४ ॥ गृहादिप्रतिबन्धस्य, निषेधार्थं तपस्विनाम् । विहारस्तीर्थकृत्ख्यातो, यतनया
नदीजले ॥ ८५ ॥ धनादिप्रतिबन्धस्य, निवारणाय गेहिनाम् । जिनपूजा जिनाख्याता, यतनया जिनागमे ॥
८६ ॥ मुनीनां तु यथेर्यायाः, प्रतिक्रान्तिर्विहारके । तथैव जिनपूजायां, प्रतिक्रान्तिः कथं न चेत् ॥ ८७ ॥
ईर्यादिव्यवहारोऽपि, सामायिकादिके पुनः । जिनाभिगमसेवादौ, न श्रुतेर्यागतिः कदा ॥ ८८ ॥ अविध्याशा-
तनायाश्च, मिथ्यैवास्तु पुनः पुनः । इति सर्वत्र वक्तव्यं, पूजायां भविकैर्जनैः ॥ ८९ ॥ वादीति वचनं श्रुत्वा,
पुनर्ब्रूते प्रभाषकः । विहारस्य च पूजाया, महदन्तरमुच्यते ॥ ९० ॥ विहारादौ तु संकोचोऽनुदीर्णालोचना

पुनः । प्रायश्चित्तं प्रतिक्रान्तिः, साधूनां दूषणं न तत् ॥ ९१॥ अत्रानुमोदनादीर्णा, निन्दनालोचना न वा । पूजायां कीदृशो धर्मः, श्राद्धानां समुदीरितः? ॥ ९२ ॥ अनभिज्ञने केनेति, प्रोक्त तस्योत्तरं शृणु । सुप्रत्याख्यातमाख्यातं, साधूनां सर्वतो व्रतम् ॥ ९३ ॥ यावतां प्राणिनां लोके, सत्त्वादीनां वधे कृतम् । प्रत्याख्यानं तु निर्ग्रन्थैस्त्रिधा त्रिधैव दृश्यते ॥ ९४ ॥ प्रत्याख्यानं हि कृत्वैव, वस्तुनो यस्य सर्वथा । तस्यैवाचरणं कर्तुं, सङ्कोचः प्रतिपाद्यते ॥ ९५ ॥ वनस्पत्यादिजातिं चेत्, सुप्रत्याख्याय सर्वथा । एकाम्रफलभुक्तौ तत् , सङ्कोचस्तस्य कथ्यताम् ॥ ९६ ॥ व्रतभङ्गोऽस्ति चेत्तस्य, साधूनां स कथं न हि! । विहारादौ च सत्वादेः, साक्षाद्वधो विलोक्यते ॥ ९७ ॥ एवं सति न सङ्कोचोऽनुदीर्णतापि नो भवेत् । न चेर्यापथिकीमात्रात्, पापं नश्यति घातजम् ॥ ९८ ॥ आम्रादिदशजातीनां, वनस्पतिस्वरूपतः । श्राद्धेन केनचिल्लब्धं, प्रत्याख्यानं विवेकतः ॥९९॥ भुञ्ज्यात्पञ्चैव तन्मध्यात्, पञ्चानामभयं यदा । तदा वनस्पतीनां च, सङ्कोचः सुखमुच्यते ॥१००॥ श्राद्धानां जिनपूजायां, हिंसासङ्कोच ईरितः । उत्तमजातिपुष्पेभ्योऽन्येषां किल निवारणम् ॥ १ ॥

स्यादनुबन्धहिंसायास्त्यागोऽत्र सर्वथा पुनः । अविधेर्हेतुहिंसैव, हिंसा स्वरूपतो विधेः ॥ २ ॥ उपयुक्तानगारस्य, पादे प्रमादयोगतः । यथोक्ता भगवत्यङ्गे, पक्षिपोतविराधना ॥ ३ ॥ तत्रेर्यापथिकी प्रोक्ता, क्रिया केवलिनां पुनः । स्यात्साम्परायिकी तत्र, गुणस्थानानुरोधतः ॥ ४ ॥ पूजायां स्थावराणां हि, जन्तूनां च विराधना । शुभभावनया भक्त्या, स्वल्पो बन्धः प्रजायते ॥ ५ ॥ भूयसी निर्जरा ज्ञेया, श्राद्धानां मुनिदानत । यथाधाकर्मिकाहाराधिकारे पञ्चमाङ्गतः ॥ ६ ॥ वादे पराजयाद्वादी, ब्रूते गौतमवद्यथा । विहारो व्रतिनां युक्तः, सिद्धान्तवचनात्पुनः ॥ ७ ॥ एवं चेत्तर्हि सिद्धान्ते, श्रावकाणां निरूपितम् । पूजैवोपासकादौ तत्कारणं निर्वृतेस्तथा ॥ ८ ॥ पूजायाः सिद्धिलाभश्चेच्चारित्रं तर्हि निष्फलम् । प्रध्वरेणाध्वना कश्चित्, प्राप्नुयान्नगरं तु यः ॥ ९ ॥ वक्रेण नैव मार्गेण, गच्छति स कदाचन । एवं चेत्पूजया सिद्धिश्चारित्रं निष्प्रयोजनम् ॥ १० ॥ लोचादिकष्टसाध्यं स्याच्चारित्रं निष्परिग्रहम् । गृह्णाति न कदा कश्चित्, पूजा तु सुखसाधनम् ॥ ११ ॥ वादिवच इति श्रुत्वा, सिद्धान्तिकः प्रभाषते । अहो बुद्धिस्त्वदी-

यात्र, चातुरिका च वर्ण्यते ॥ १२ ॥ स्थानाङ्गे द्विविधो धर्मोऽगारानगारभेदतः । अगारो द्विविधः प्रोक्तः, सम्यक्त्वदेशभेदतः ॥ १३ ॥ यद्यनगारधर्मस्तु, स्यात् संपूर्णदयामयः । मोक्षाङ्गं तर्हि सर्वोऽपि, श्राद्धधर्मो निरर्थकः ॥ १४ ॥ साधुभ्यः शुद्धदानेन, स्यान्महानिर्जरा यदि । भगवतीवचः श्रुत्वा, कश्चिद् ब्रूयाद् व्रतेन किम् ?॥ १५ ॥ एवं सिद्धान्तसामर्थ्याद्वादी निरुत्तरीकृतः । पुनर्व्रते प्रवादेन, सेर्ष्यं सन्मुखभाषया ॥ १६ ॥ एकैव भो दया यत्र, धर्मस्तत्रैव भाषितः । श्रावकस्यापि साधोश्चान्यत्तु सर्वं निरर्थकम् ॥ १७ ॥ पापस्थानानि सन्त्येवाष्टादश दुःखदान्यपि । तेषां न भावतो धर्मो, जिनेश्वरैः प्रभाषितः ॥ १८ ॥ पापस्थानानि वर्त्तन्ते, सप्तदश पराण्यपि । तेषामभावतो धर्मः, किं न स्यात्त्वन्मते वद ॥ १९ ॥ परमस्तु दयाधम एक एव भवन्मते । मृषावादाद्यभावो हि, धर्मो नास्ति कदाचन ॥ २० ॥ त्वदीयं कीदृशं ज्ञानमेषा का च विचारणा । त्वन्मते तु निगोदेषु, धर्मोऽस्तु नान्यजन्तुषु ॥ २१ ॥ संसारवासिजीवानां, प्रवृत्तिर्यत्र दृश्यते । षट्कायहिंसनं तत्र, साधूनां गृहमेधिनाम् ॥ २२ ॥ वैयावृत्त्यादिके साधोर्दानाभिगमनादिके । प्रवृत्तिः श्राद्ध-

लोकस्य, हिंसा विना क्व दृश्यते? ॥ २३ ॥ अशक्यपरिहारादौ, हिंसा नैव प्रभाष्यते । साधूनां श्रावकाणां च, वैयावृत्त्यादिसेवने ॥ २४ ॥ यतनां कुर्वतः साधोः, प्राणिनां च वधे सति । हिंसा संभाव्यते नैव, प्रायश्चित्तं पुनः पुनः ॥ २५ ॥ सुपरिहरणीयैव, हिंसाऽस्ति जिनपूजने । सचित्तानां च पुष्पाणां, जलदीपादिवस्तुनाम् ॥ २६ ॥ यत्र हिंसा न धर्मः स्याद्यदुक्तं च त्वया पुरा । स्वमुखेनैव हिंसायां, सत्यां धर्मो निरूपितः ॥ २७ ॥ आत्मार्थी त्वं च चेन्द्र!, स्वीयं वचो विचारय । यत्र हिंसा न धर्मः स्यादिति सम्यक् स्वचेतसा ॥ २८ ॥ हिंसा स्यात्ते परप्राणपरित्यागात्मिका मते । अशक्यपरिहारत्वं, तत्र नोक्तं त्वया पुरा॥ २९ ॥ यत्र हिंसा न धर्मः स्यादशक्यपरिहारतः । पूर्वापरविरोधेन, तत्र वाक्यं प्रवर्तितम् ॥ ३० ॥ वरमस्तु मतेऽस्माकमिष्टापत्तिस्तु जायते । एवं जानीहि पूजायामशक्यपरिहारताम् ॥ ३१ ॥ मोहनीयं द्विधा कर्म, व्रतसम्यक्त्वघातकम् । चारित्रावरणं कर्म, हिंसायाः कारणं मतम् ॥ ३२ ॥ दर्शनमोहनीयस्याभावात्सम्यक्त्वमुद्गतम् । ततो भक्तिर्जिनेन्द्रस्य, ततः पुष्पादिपूजनम् ॥ ३३ ॥ चारित्रावरणात्कर्मरूपादारम्भ

उच्यते । अविरत्युदयाद्भक्तिः, सावद्यैव स्वरूपतः ॥ ३४ ॥ धर्मद्वयं च पुष्पादौ, सचित्तेऽसारतावधः । अ-
शक्यपरिहारोऽस्ति, भक्तौ सारतया पुनः ॥ ३५ ॥ हिंसार्थं न च पुष्पाणामानयनं जिनार्चने । पुष्पेषु सा-
रता दृष्टा, सुपुष्पैर्जिनपूजनम् ॥ ३६ ॥ पुष्पादिभ्यः सचित्तेभ्यः, पदार्थो बहवो वराः । पूजा तैरेव कर्तव्या,
किं सचित्तेन वस्तुना? ॥ ३७ ॥ अविरत्युदयात्पुष्पादिकं ग्राह्यं सुभक्तितः । अन्यत्र तस्य पुष्पादे, रक्षाक्र-
न्नास्ति कश्चन ॥ ३८ ॥ पुष्पाणां यावतां लोके, स्याद्विषयानुबन्धतः । हिंसा संसारिणां भक्त्याऽर्हतां पुष्पार्चने न
सा ॥ ३९ ॥ नवकोट्या न तत्त्यागः, श्राद्धानां देशतो व्रतम् । पूजायां नवकोट्यास्तद्धिंसात्यागो जिनार्च-
ने ॥ ४ ॥ मणिरत्नमयी भूमिः, स्वर्गेऽस्ति स्वर्गिणां कथम् । स्वर्णादौ तत्र सारत्वं, पुष्पेभ्यो हि प्रदर्श्यते ॥
४१ ॥ पुष्पेषु शुभगन्धत्वं, सुस्पर्शत्वं सुकोमलम् । उज्ज्वलत्वं विशेषेण, चेत्यादि बहवो गुणाः ॥ ४२ ॥ तान्
गुणान् प्रविलोक्यैव, पुष्पेषु श्रावका जनाः । पूजयन्ति जिनान् भक्त्या, पुष्पैरेव विशेषतः ॥ ४३ ॥ एवं
सारपदार्थो ये, संसारे हि जलादयः । भक्तिस्तैरेव कर्तव्या, तीर्थकृतां च मुक्तये ॥ ४४ ॥ न च तज्जीव-

हिंसार्थं, पुष्पादिभिर्जिनार्चनम् । पुष्पादिजीवहिंसायामशक्यपपरिहारता ॥ ४५ ॥ पूर्वोक्तगुणयुक्तान्यचित्त-वस्तूनि सन्ति चेत् । तानि त्यक्त्वा सचित्तानि, गृहीत्वा तांश्च पूजयेत् ॥ ४६ ॥ मिथ्याशल्यं भवेदेकमेकतो हि पराण्यपि । पापस्थानानि तोल्यन्ते, मिथ्यात्वमधिकं ततः ॥ ४७ ॥ हिंसाद्यष्टादशे स्थाने, मिथ्यात्व-माधिकं मतम्। मिथ्यात्वापगमाद्धिंसा, शीघ्रं नश्यति दूरतः ॥ ४८ ॥ सम्यक्त्वशुद्धिमादध्याज्जिनपूजैव भक्तितः । चारित्रं प्राप्नुयात्प्राणी, शीघ्रं दर्शनशुद्धितः ॥ ४९ ॥ अत एव सुराः सर्वे, सचित्तैः कुसुमैर्वरैः । योजनं मण्डलं चक्रुर्भक्त्या सम्यक्त्वशोधनात् ॥ ५० ॥ नौभङ्गाद्युपसर्गात्तु, सम्यक्त्वं नैव खण्डितम् । श्रमणोपासकाग्र्येण, श्रुतं ज्ञातादिसूत्रतः ॥ ५१ ॥ अतः पारगपूजायां, हिंसैव नास्ति काचन । विहारादौ च साधूनां, नद्युत्तरणवद्यथा ॥ ५२ ॥ एवं चेत्तर्हि साधूनां, पूजा योग्या विहा-रवत् ? । इति वादिवचः श्रुत्वा, सिद्धान्तिकः प्रभाषते ॥ ५३ ॥ विमुक्तद्रव्यरोगाणां, निर्ग्रन्थानां न चो-चिता । पूजौषधंसमा ज्ञेया, नीरोगिणामिवोदिता ॥ ५४ ॥ यावद्दीक्षा न चायाति, मूर्च्छात्यागस्तु नो भवेत् ।

तावज्जिनेन्द्रपूजां च, कुर्याद्गृही सुभक्तितः ॥ ५५ ॥ पूजायामर्हतां नैव, हिंसाऽग्नितापवन्मता । परीक्षेति तृतीया हि, समाप्ता बहुयुक्तिभिः ॥ ५६ ॥ इति चतुर्थाधिकारे तृतीया परीक्षा समाप्ता ॥

परीक्षा क्रियते तुर्या, घनकुट्टनवद्दरा। श्रुतेऽर्हत्प्रतिमाऽऽराध्या, प्रोक्ता सङ्घस्य भक्तितः ॥५७॥ स्तवस्तुति पदे नैवार्हतः सद्गुणवर्णनः। कर्तव्या भव्यजीवौघैरुत्तराध्ययनादितः॥५८॥श्रमणोपासकानां ये, मनोरथास्त्रयः शुभाः। तन्महानिर्जरं प्रोक्तं, महापर्यवसानकम् ॥ ५९ ॥ कदा परिग्रहत्यागं, स्वल्पबहुधनव्ययात् । करिष्याम्यहमेवाद्यो, मनोरथः शुभावहः ॥ ६० ॥ चारित्रं च ग्रहीष्यामि, मनोरथो द्वितीयकः । संलेखनां करिष्यामि, तृतीयो हि मनोरथः ॥ ६१ ॥ आश्वासाः किल चत्वारो, गृहिणां समुदीरिताः । तेषां हि प्रथमाश्वासे, द्रव्यस्तव उदाहृतः ॥ ६२ ॥ इति स्थानाङ्गसूत्रोक्तेर्भावनीयं स्वचेतसि । सम्यग्दृग्भिः सदा कार्यं, गृहस्थोचितमेव हि ॥ ६३ ॥ ये सम्यग्दृष्टयो जीवा, यावन्तो भुवनत्रये । तेषां चैत्यानि पूज्यानि, सूत्रौपपातिकादितः ॥ ६४ ॥ एवं बहुषु सूत्रेषु, निर्युक्त्यादिषु भाषितः । द्रव्यस्तवाधिकारो हि, गृहस्थानां सुखोचितः ॥

६५ ॥ परीक्षेयं चतुर्थी स्यात्, सिद्धान्ताक्षरसंमता । समाप्ता शमभावेन, चैत्याराधनगर्भिता ॥ ६६ ॥ व्यवहारनयेनैव, सम्यक्त्वं सुविचारितम् । निश्चयनयतो ज्ञेयं, विशेषज्ञानिभिर्दृढम् ॥ ६७ ॥ छद्मस्थैः खलु न ज्ञेयं, दशस्थानं विशेषतः । भव्याभव्यादिकं प्रोक्तं, गणधरैर्जिनागमे ॥ ६८ ॥ चतुर्थीति परीक्षेयं, सिद्धान्ताक्षरसंमता । ताडनवत्समाप्तैव, प्रेक्ष्या भव्यैः सुदृष्टितः ॥ ६९ ॥ पञ्चाङ्गया अनुसारेण, श्रीगुर्वादिप्रसादतः । गृहस्थानां यथायोग्यं, सम्यक्त्वं सुपरीक्षितम् ॥७०॥ इति चतुरधिकारैः सारसम्यक्त्वपरीक्षा, प्रवचनवचनोक्त्या जैनयुक्त्या प्रसिद्धा । कुमतिमततमिस्रच्छेदिनी चैत्यवृत्त्यां, विबुधविमलसूरीशोदिता तीर्थभक्त्या ॥७१॥ मालिनी॥ विमलपदभृत्श्रीआनन्दाभिधानमुनीश्वराः, सुविहितवराः सङ्गीतार्थास्तपागणमण्डनम् । कृतनिजहितास्तेषां पट्टप्रभाकरशेखरा, विजयपदयुक्श्रीदानाख्या युगे शुभसूरयः॥७२॥हरिणी॥ तेषां पट्टवियत्तले सविजयाः श्रीहीरसूर्योपमाः, क्षित्यामक्बरसाहिना द्युतिमता विख्यातसत्कीर्त्तयः । श्रीसेनाद्विजयाख्यसूरिसुभगाः पट्टेशहृद्यास्पदं, सूरिश्रीविजयादिदेवमुनयो गच्छे तपानामनि॥७३॥शार्दूलविक्रीडितम्॥ तेषां पट्टे प्रभाख्या विजयपदयुताः

सूरिमुख्या बभूवुस्तत्पट्टे ज्ञानसूरिप्रवरसविमला साधुसंविग्नसंज्ञाः । श्रीसौभाग्याभिधाना जलधिपदयुजः सूरिसंपत्प्रयुक्तास्तेषां पट्टे तपस्वी सुमतिजलनिधिः सूरिसंज्ञान्वितोऽभूत्॥७४॥स्रग्धरा॥धत्ते न्याययशा यशोविजयतां श्रीवाचको नामनि, साहाय्याद्बुधऋद्धिनामविमलः संवेगमार्गस्थितः।तच्छिष्यो गुरुकीर्तिकीर्तिविमलो बुद्धो गुरुस्तच्छिशुः,सूरिःश्रीविबुधाभिधानविमलो ग्रन्थं व्यधत्तामुकम्।७५।शार्दूल॥नोरङ्गबादपुर्यां प्रथितजिनगृहश्राद्धवर्गान्वितायामाचार्यो यौवराज्ये सविमलमहिमा सूरिनाम्ना प्रसिद्धः। नीत्याद्यैः साराशिष्यैः शुभपरिकरितो ग्रन्थरूपं त्वकार्षीद्भव्यानां धर्महेतोः स विबुधविमलः शुद्धसम्यक्परीक्षाम् ॥ ७६ ॥ स्रग्धरा॥ यत्राराध्या जैन्यः, प्रतिमाः सम्यग्दृष्टिभिः श्राद्धैः। ग्रन्थो विबुधविमलगणिकृतः स सम्यक्परीक्षेति ॥ ७७ ॥ शाके नन्धवार्धिरसचन्द्रमिते संवत्सरे (१६७८) ज्येष्ठमासि । वह्निविधुपर्वतचन्द्रमिते विक्रमसंवत्सरे (१८१३) शुभे ॥ ७ ॥ शुक्लपक्षे त्रयोदश्यां, समाप्तोऽयं हि ग्रन्थकः ॥ भानुविमलसाध्वर्थं, भविनां सुखकारकः ॥ ७८ ॥ यत्किञ्चित्सिद्धान्ताद्विरुद्धं लिखितमनुपयोगेन। तच्छोध्यं विद्वद्भिर्मिथ्या तद्दुष्कृतं मेऽस्तु ॥ ७९ ॥ ग्रन्थः सिद्धान्तयुक्तार्थो, वादि-